# श्रीरस्तु

## श्री महात्रिपुरसुन्दर्यै नमः

# ।। नित्यचण्डीनवचण्ड्यादिविधिः ।।



ऋषिरुवाच

नित्य चण्डयादि जाप्यस्य विधानं ते वदाम्यहम्।

क्रमेण सर्वकार्याणां सिद्धये यज्ञपुण्यदम् ॥

पूर्वोक्तविधिना कृत्वा चण्डिकातर्पणादिकम्।


आदि शङ्कर वैदिक विद्या संस्थान

दूरभाष:9044016661

शुक्लां भूतिमवष्टभ्य मासं प्रतिदिनं जपेत् ||
सकृद्रहस्य संयुक्तं चण्डिकाचरितत्रयम्।
दशांशहोमसहितं सोच्यते नित्यचण्डिका ||
धनपुत्रयशोधात्री महाव्याधिविनाशिनी।
महाभय महादुःख हन्त्री सौख्यप्रदायिनी ||
शुक्लाष्टमीमवष्टभ्य यावच्छुक्लचतुर्दशी |
नवदुर्गा विधातव्या सर्वकार्यफलार्थिना ||
पूजयेद्विधिवद्देवीं चण्डिकां कृततर्पणाम्।
कलशं पञ्चरत्नाढ्यं सहकारदळाकुलम् ॥
वस्त्रं संप्रतिष्ठाप्य चण्डिकाग्रेंभसा भृतम्।
समन्तात्पूजयेद्दिक्षु दिशापालान्यथाक्रमम् ||
चन्दनेन विलिप्ताङ्गस्स्रग्वी न्यासपरायणः।
तवाहं भूय एकैकं मौनी बद्धासनी जपेत् ॥
प्रणवादिरहस्यान्तं चण्डिका चरितत्रयम्।
चतुरश्रे समे कुण्डे समन्ताद्धस्तमात्रके ||

एकावरणसंयुक्ते योनिमण्डलमण्डिते।
दशांश विधिना होममुक्तद्रव्येण साधयेत् ||
नवदुर्गा मखे कुण्डमेवं जानीहि भूपते।
नित्य चण्डीविधानेपि कुण्डमीदृक्प्रकीर्तितम् ॥
नवचण्डी मखे कुण्डमीदृग्लक्षणमुच्यते।
एतत् द्विगुणितं कुण्डं शतचण्ड्याः प्रकीर्तितम् ॥
कृष्णाष्टमीमवष्टभ्य नवदुर्गाविधानवित्।
यद्वयं क्रियते जाप्यः कालरात्रिरितीरिता ॥
महाकालोद्भवं दुःखं कालरात्रिर्व्यपोहति।
संस्कारैरष्टभि कुण्डं संस्कृत्याग्निं प्रकल्पयेत् |
मायाबीजसबायुक्तं गोक्षीरं यत्र साधकः |
कुण्डमध्ये भुवं दर्भैः परिमार्ज्योपलेपयेत् ॥
प्रागग्रास्तु समूलेन रेखास्तिस्रस्समुल्लिखेत्।
पांसुमुद्धृत्य रेखाणामभ्युक्षणमतः परम् ॥
कुण्डस्य पूजनं षष्ठं सप्तमं सप्तमुद्रया |

अस्त्रावकुण्ठनं कुण्डे संस्कारश्चाष्टमस्स्मृतः ||
शतमण्डलनामानं कुण्डेग्निं स्थापयेत्ततः।
चण्डिकापाठसंपूर्ण ब्राह्मणं दक्षिणे ततः ||
ततस्तत्वाग्निकं कुण्डं नवसूत्रेण वेष्टयेत्।
कुण्डस्योत्तरतस्स्थाप्य प्रणीता वारिपूरिता ॥
प्रणीता पात्रधर्मेण उत्तरे वैश्वदेवताः |
स्थापयेत्प्रोक्षणी पात्रं प्रणीतोदकपूरितम् ||
प्रणीता पात्रतः पूर्वे स्थाप्यः पात्रगणः क्रमात्।
आज्यस्थाली चरुस्थाली गव्यक्षरसमन्विता ||
स्रुक्स्रुवौ च घृतं गव्यं तण्डुलाः कुशमूलकम्।
पालाश समिधस्तिस्रः पूर्णपात्रमतः परम् ॥
सप्तद्वीपेश्वरीं ध्यात्वा गृहीत्वा कुशमूलकाम् |
निक्षिपेत्प्रोक्षणी पात्रे वारुणं बीजमुच्चरन् ||
तेन दर्भसमूहेन शतसंख्येन संस्थितम्।
क्रमात्पात्रगणं प्रोक्षेत् प्रोक्षणी पात्रवारिणा ||

आज्यपात्रे चरुस्थाल्यां निक्षिपेच्छवेततण्डुलान्।
यथाक्रमेण कर्तव्यं ततो निर्वापणत्रयम् ||
अथ्यग्निपायसं कार्य पर्यग्निकरणं तयोः।
सव्यं पालाशकाष्ठेच त्रिभिर्दर्भैश्च उज्वलैः ॥
स्स्रुक्स्रुवस्थापनं कृत्वा प्रणीतोदकसेचनैः।
पुनः प्रतपनं कृत्वा दक्षिणे स्थापनं स्मृतम् ||
उद्वास्य प्रथमं पूर्वा दानीयाग्नेः प्रदक्षिणम्।
कुण्डाचार्यान्तरे स्थाप्य स्वबीजजपगौरवात् ॥
अभिघार्याज्यपात्रेण वायव्ये स्थापयेच्चरुम्।
स्वबीजकृत संस्काराद्धेनुमुद्रां नियोजयेत ||
तिस्रः पालाशसमिधो मौनी वैश्वानरे क्षिपेत्।
कुशमूलकयुक्ताभिः प्रोक्षिण्यद्भिः प्रदक्षिणम् ॥
पर्युक्ष्यान्नं प्रणीतायां निक्षिपेत्कुशपत्रकैः।
निधाय दक्षिणं जानुं भूमावग्निमुखे हुवेत् ||
आन्वारब्धसुवेणाज्यं विधूमे हव्यवाहने।

प्रजापतिर्महाकाळी महालक्ष्मीस्सरस्वती ||

एतदग्निमुखं प्रोक्तं मायाबीजपुरस्सरम्।

संस्रावान्प्रोक्षणी पात्रे निक्षिपेद्यज्ञसाधकान् ॥

विदध्यात्कल्पितं होममुक्तेन हविषा शनैः

तेन स्विष्टकृतस्तस्याद्धविषा प्रोज्वलेऽवले ॥

**{*मायाबीजम्-ब्रह्माणी माहेशी कौमारी वैष्णबी वाराही नारसिंहीन्द्राणी चामुण्डायै विच्चे स्विष्टकृते स्वाहा ।। (मन्त्रः)}**

**--स्विष्टकृदाहुतौ-**

आज्यस्य नवकन्दद्यान्माया बीजादिनामभिः |

तत्र नन्दा भवत्याद्या द्वितीया रक्तदन्तिका |

शाकम्भरी तृतीयास्याद् दुर्गा भीमे च तत्परे |

भ्रामरी काळिका चैव शिवदूती प्रजापतिः ॥

गन्धपुष्पफलोपेतां कृत्वा यज्ञात्मिकां स्रुचम् |

ततः पूर्णाहुति दद्याद्घृतस्याच्छिन्नधारया ||

नवाक्षरेण मन्त्रेण महालक्ष्मीपरायणः।

ध्यात्वा यज्ञपुरोडाशममृतं देवदुर्लभम् ||
प्रोक्षणीपात्रमध्यस्थात् मन्त्रेणाश्नातिसंप्रवान् ।
यस्माद्यज्ञरसात्पूता यज्वानो ब्रह्मरूपिणः ||
तं संस्राव पुरोडाशं प्राश्नन्ति सुखपुण्यदम् |
सलिलेन प्रणीतायास्तीर्थध्यानपरायणः ||
करोति मार्जनं दर्भशतेन श्लोकपाठतः।
शिवायाश्शक्तयो याश्च याभिश्च सविता सहा ||
मा आपस्सत्यसन्धानास्तामे कृण्वन्तु भेषजम् |
अभिषिञ्चेदधात्मानं चतुर्भिश्चण्डिकास्तवैः ॥
दानं दद्याद्विधानेन हेमधेनुधराधिकम् |
नवदुर्गातिव्याख्याता पापता प्रणाशिनी ॥
सर्वेश्वर्यप्रदा भूप कुर्वतामवलंबतः।
नवदुर्गाविधानेऽस्मिन् यत्फलं परिकीर्तितम् ||
काळरात्रि विधानेऽपि तत्फलं लभते ध्रुवम्।

एतत् त्रिगुणितं सर्वं नवदुर्गाजपे फलम् ||

कथितं तदवाप्नोति नित्यं चण्डी जपे कृते।

ऋषिरुवाच

शरदृताविषे मासि शुक्लपक्षे नृपोत्तम ||

प्रतिपत्तिथिमारभ्य नवचण्डीमथारभेत्।

तोरणाढ्येशुभे स्थाने सुविताने स्वलंकृते ॥

पूर्वादिक्रमयोगेन दिग्देवीभ्यो बलि हरेत्।

गन्धपुष्पाक्षतैर्धूपैदीपैश्चारुभिरुत्तमैः ||

कादम्बरी गजारूढा पुनरुष्णा च पृष्ठगा |

कराळी महिषारूढा रक्ताक्षी प्रेतसंस्थिता ॥

श्वेतकौबेरिकाश्वत्था हरिता मृगवाहना।

यक्षिणी सिंहपीठस्था कङ्काळी वृषवाहना ॥

सिंहपृष्ठे सुरज्येष्ठा सर्पराजाहि वाहना।

अनेन विधिना दत्वा दिग्देवीभ्यो बलिं जपेत् ||

नवग्रहान्लोकपालान्दिशापालांश्च पूजयेत्।

कलशं सर्वरत्नाढ्यं हेमवस्त्रोदकान्वितम् ||
संप्रतिष्ठाप्य संपूज्य चण्डिकार्चनमारभेत्।
पूर्वोक्तेन विधानेन गन्धपुष्पैरनुत्तमैः ॥
वस्त्रालङ्कारकस्तूरीसिन्दूरागरुकुंकुमैः।
धूपैर्बहुविधेद्रव्येनैवेद्यर्वर्णसंख्यया ||
कृत्वाऽन्यत्पूर्ववत्सर्वं जपेदेकाग्रमानसः।
सकृद्रहस्य संयुक्तं चण्डिकाचरितत्रयम् ||
कुमारीविप्रमुख्यांश्च भोजयेद्विधिपूर्वकम्।
यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम् ||
द्विगुणं तद्द्वितीयह्नि त्रिगुणं तत्परेऽहनि।
नवमी तिथिपर्यन्तं वृद्धया पूजाजपादिकम् ||
एकाहारं व्रतं कुर्यात् सत्यादिनियमैर्वृतः।
कृत्वा होमादिकं सर्वं नवदुर्गाविधानवत् ||
वित्तशाठ्यं  परित्यज्य कुर्यादाचार्यतोषणम् |
वस्त्रांगुळीयभूधेनुवाजिहोमप्रदानतः ||

अशक्तौ निष्कमेकं तु दद्यादस्मै प्रयत्नतः!
श्रुणु चास्य फलं भूप यो वै कश्चिदनेन वै ॥
विदधाति विधानेन जपेत्तु नवचण्डिकाम्।
इन्द्रब्रह्मादयो देवास्तमायान्ति प्रसेवितुम्॥
अपुत्रो लभते पुत्रान् निर्धनस्तु धनी भवेत्.
व्याधयस्तु क्षयं यान्ति शत्रवश्चैव दारुणाः ॥
न तस्यास्ते भयं किञ्चिद्राजचोराग्निवारिणाम्।